वाट्यालकं वाट्यपुष्पं[1] समासं[2] विनया[3] बला । श्वेत बाड़्याला ॥
ऋष्यप्रोक्ता स्वतिबला पीतपुष्पा महाबला ॥ पीत बाड़्याला[4] ॥
सैरीयकः सहचरो बाणो[5] नीलकुरण्टकः । नीलझिण्टि ॥
वीरः सहचरः पीतपुष्पो दासी *कुरण्टकः ॥ पीतझिण्टि ॥
त्रिपर्णी वनकार्पासी भारद्वाजी वनोद्भवा । वनकापासी ॥
कुबेराक्षी कुलिङ्गाक्षी[6] पेटिका[7] कृष्णवृन्तिका[8] ॥ पेटारी ॥
पिचुको[9] मुचलिन्दश्च[10] कण्टकी मदनो मतः । काँटा मएन ॥
तिमिरको[11][दन्तशुद्धि[11a]]द्विवृन्तो[12] नखरञ्जकः ॥ महिन्दी (मिञ्जाति[12a])॥
शिखण्डिनी च वासन्ती यूथिका गणिका च सा । यूहिपुष्प ॥
मदयन्ती गन्धवती मोदयन्ती खरस्वना[13] ॥ मालिपुष्प ॥
शीतभीरु[14] भद्रमल्ली[15] भूमिमण्डो[16]ऽष्टपादिका । शतदलमाली ॥
कुमारिका ग्रीष्मभवा सुगन्धा वनमालिका[17] ॥ लेहालि ॥
मोहिनी[18] मल्लिकाख्या तु वटपत्रा च मोहना । त्रिपुरमाली ॥
सहस्रवीर्या दूर्वा तु मङ्गल्या भार्गवी रुहा ॥ दूर्वा ॥
शतपर्वा सितदूर्वा शतवीर्या सिता लता[19] । श्वेतदूर्वा ॥
विश्वोरोऽर्क[20] सदापुष्पी[21] रूपिकादित्यपुष्पिका ॥ आकन्द[22] ॥
श्वेतार्कोऽलर्को मन्दारो[23] राजार्को गणरूपिका[24] । श्वेत आकन्द ॥
जुङ्गच्छगन्धा छगलान्त्र्यावेगी वृद्धदारकः ॥ निजताड़क[25] ॥
सप्तला स्या[26]च्चर्मकषा[27] भूरिफेना[28] च सातला[29] । चामकसा ॥
खदिररिक्तसारः स्याद् गायत्री कण्टकिद्रुमः[30] ॥ खदिर ॥

---

1 E F I ŚK VŚ °को वाट्यपुष्पी 2 H I. ŚK VŚ समांसा E °सो F मासी च. 3 F.H VŚ विलया, ŚK विलला 4 E omits ऋष्यप्रोक्ता ..5 E नागो F वासो *I J. कुरु°. 6 A.B क°. 7 A B,G घो°. 8 A B कालवृत्तिका F. °वृत्तिका 9 F. पे°. 10 F. ŚK मुचकुन्द°. E वृचिकन्द° I सूचि (H सृति°) लिङ्गश्च 11 A.B.G त्रिमा°. 11a A °दह स्वश्च. B G °दह सुश्व. E °दभूण्डुश्च H °कोद्भोढश्च I °वोदमाटश्च 12 A B.G J कुरूभो. E निवृत्तो 12a F. & apparently also ŚK. VŚ omit this line. 13 F. स्मरस्मरा. 14 A B.J. शत°. 15 E F I ŚK VŚ °वल्ली 16 A B °मल्यश्च°. 17 F. °मल्लिका ŚK नव°. 18 A B °ह°. 19 A B क्वचित्. 20 E °श्वेरो A. वर्छरो B G J. विछरो. 21 A. °पुष्पा B °ष्पी 22 E लोहितार्क 23 A B. °र. 24 F. ŚK ... राजार्को गणरूपी प्रतापस. 25 A.B.I J. omit जुङ्ग° 26 A B J °स्या च°. 27 E F. °कसा. 28 A.B J. चर्मसाक्षा. I. चर्मसज्ञा 29 E सरवना 30 F. °क°.

सोमवल्को ब्रह्मशल्य: कदर: खदिरोपम:[1]। श्वेत खदिर (काँटा बाबूला) ॥
विट्खदिरोऽरिमेद: स्यादरिमो[3] मरुज[4]द्रुम: ॥ गुप्पा बाबूला[5] ॥
धवो धुरन्धरो वृक्ष: शकटाक्ष:[6] सितोऽसित: । धवगाछ ॥
न्यग्रोधस्तु ध्रुव: श्रृङ्गी[7] वटो वैश्रवणोदय: ॥ वटवृक्ष ॥
पिप्पलो बोधिरश्वत्थ श्चैत्यवृक्षो गजाशन: । अश्वत्थ ॥
शारद: सप्तपर्णा[8] स्याद् बृहत्त्वग् ब्रह्मनाशन: ॥ छातिम ॥
प्लक्ष: कमण्डलुवृक्ष: पर्कटी लक्षणो गिरि:[9] । पाकड़ि ॥
यज्ञाङ्गो वसु[10]वृक्षश्च हेमदुग्धोऽप्युडुम्बर: ॥ यज्ञडुम्बुर ॥
शाकवृक्षश्च शाकाख्य: खरपत्रोऽर्जुनोपम:[11] । शेगुन ॥
गजाशनाश्वपुत्री[12] च सल्लकी[13] सुरभी स्रुवा[14] ॥ शल्लयी ॥
मधूली घृतमण्डा च वायसोली[15] सुमङ्गला माकड़हाता[16] ॥
ग्राहिणी कच्छुरागम्या[17] ताम्रमूला मरूद्भवा ॥ जिराइ[18] ॥
अलम्बुषस्तु गोच्छालो[19] भूकदम्ब: कुलाहक:[20] । कुकूसिमा ॥
कैटर्य: वमनेष्टश्च[21] महानिम्बस्तु पार्वत: ॥ महानिम्ब ॥
राजादन: क्षीरवृक्ष: पलाशी वानरप्रिय: । क्षीरवृक्ष[22] ॥
तूलिनी स्यात्तूलफला तथा मोचा च शाल्मली ॥ सिमलि ॥
मोचरस: शाल्मलश्च शाल्मलीवेष्टकस्तथा[23] । शिमलि आठा ॥
कुरवक:[24] शुक्लपुष्पस्तिलक:[25] कुल[26]कोऽपि च ॥ दण्डिकुरुया[27] ॥
षट्पदेष्ट:[28] प्रावृषेण्य: कदम्बो हलधृक[°धृत्?]प्रिय:[29] । कदम्ब ॥
विकङ्कत: स्वादुकण्ट: स्रुग्दारु: मधुपर्ण्यपि ॥ वोँइचि[30] ॥

1 A.B. °रोसित.. 2 E F. बावला. 3 E I °दिरिमो. 4 °जो. 5 F. omits विट्खदिरो... 6 F.H. ŚK.VŚ. °स्य:. 7 H. शृगी. 8 E. सदैव सप्तपर्णाक्षो. 9 F. प्लक्षो जटी पर्कटी स्यात् कमण्डलतरुश्च स, while E.I. have both successively. 10 F.I. वृक्ष°. 11 H. I. शावृक्षो हलीमश्च महापत्रोऽर्जुनापम. A.B.G. हलीमश्च महावृक्षोर्जुनोसम. 12 E.I. °गोरवपत्री. F. ज्य पत्री. 13 F. शल्वरी. 14 B. सर. E. सुरा. F. श्रवा. 15 F. वायशोणी. 16 A.B.I. कांकड़ियागोरि. E. माकाच्छाना. 17 E.F.I. चान्या. 18 A.B. दुरालमाभेद. 19 A.B. गाछोलो. E. गुच्छलो. 20 E. °हल:. 21 A.G. वमनेस्व°. B. वमनेस्व°. F. परमेष्ट°. E. पवनेष्ट°. 22 E. क्षीरी°. 23 A.B.G. omit this line. 24 E.F.H.I. ŚK. VŚ. मरु°. 25 A.B.J. तिक्तक. 26 A.B.E.J. वुलिको. 27 E. नयाफुल. F.I. मरुयाफुल. 28 E. ष्टपदेन्या. A.B. षट्पादप. 29 E.F. ŚK. VŚ. °म्बश्च हरि°. 30 A.B.G. धमना.

धन्वनः पिच्छिलत्वक् च धनुर्वृक्षश्च[1] धर्मणः[2] । धामनिया गाछ ॥
कुम्भिकः[3] पुरपस्तुङ्गः पुन्नागो रक्तकेशरः[3a] ॥ पुन्नाग ॥
पिङ्गला पिच्छिला धीरा[4] कृष्णसारा च शिंशपा । शिंशपा ॥
कालस्कन्धस्तिन्दुकश्च[5] स्फूर्जकस्तिन्दुकीति च ॥ केन्दु* ॥
नीलकण्ठः पीतशाल· पीतकः प्रियकोऽप्रनः । पीतशाल[6] ॥
साद्र्योऽश्वकर्णः कुशिको[7] वन्यो दीर्घो लताद्रुमः ॥ सियाड़ि[8] ॥
मधुपुष्पो मधूकश्च गुडपुष्पो मधुद्रुमः । महुल ॥
गौरशाको मधूलो[9]ऽन्यो गिरिजः स्वल्पपत्रकः ॥ गिरिज महुल ॥
विदुलो[10] वेतसः शीतो[11] वानीरो वञ्जुल.[12] प्रिय. । वेत ॥
पूतिपुष्पोऽङ्गार[13]वृक्ष इङ्गुदी तापसप्रियः ॥ [इङ्गुदी[14]] ॥
हेमपुष्पस्त्वशोकश्च कर्णपूरो[15]ऽङ्ग[16]नाप्रियः । अशोक ॥
अशोकाभा दलैः पुष्पैर्लता साशोकरोहिणी ॥ लता अशोक[17] ॥
रक्तपुष्पो मुनितरुरगस्ति वङ्गसेनक. । रक्त वकवृक्ष[18] ॥
हिङ्गुपर्णी वेणुपत्री नाडीहिङ्गु शिवाटिका ॥ हिङ्गुपत्री[19] ॥
अजकर्णो वने[20]सर्जो महासर्जोऽसनस्तु सः । महासाल[21] ॥
धन्वी धनञ्जय. सालो[22] नदीजः ककुभोऽर्जुनः ॥ अर्जुन ॥
कट्फलः सोमवल्काख्यः सोमवृक्षश्च रोहिणी । काफल ॥
घण्टापाटलिका क्षारद्रुमुष्कः कालमुष्कक: ॥ घण्टापाटली[23] ॥
भेकी मण्डूकपर्णी तु मण्डूकी मूलपर्ण्यपि । थुलकुड़ि । केड्सक्रौकड़ि ॥
वातिङ्गनस्तु वार्ताकु वार्ताकी बृहती घरा[24] ॥ वाग्यन ॥

---

1 E. धन्नवृ°. H धर्म° 2 A B.G J omit धन्वन°... 3 E. कुम्बीकः. F. कुम्बिका. H I. ŚK. कुम्भीक . 3ᵃ A B J. °स°. 4 A B J. धारा. Γ वीरा. 5 A. तिक्तक°.B. तिक्तिकि°. *After this J. has lines 557-560. 6 A.B J नीलमण्टा (B.°मण्डा) पीतसालो जीवकोऽसन आसन । आसन॥ 7 A ह्लीसिको B. द्रिसि°. 8 E. लतापलाश. F. लताशालि. 9 A.B.J. मधूको. 10 Γ VŚ. विच्छलो 11 F.VŚ. पीतो. 12 F ŚK. VŚ. °लप्रिय . ŚK.VŚ. also प्रिय *q.v.* 13 A B.G I. °ष्पा क्षीर°. E.Γ. °पुष्प. 14 E F. जियापुता. A B G.J भुज्यपत्र. 15 F. गुच्छपुष्पा. 16 A.B G. च. E च न 17 Γ omits अशोकाभा... 18 A.B.E G.H.I.J. omit रक्तपुष्पो.., but ŚK.VŚ support it. 19 F. वशपत्री I वेतुकोनी 20 F. वन°. 21 F.असनगाछ E omits the line 22 Γ H I पार्थो. 23 A.B. भुनभुनिञा 24 A.B. वातिङ्गिनस्तु कवर्त्तो वात्तक बृहती च सा. E. वात्तिङ्किनस्तुकं वन्तो वनत्तक बृहती च सा. J. has 575-577 after this

पटोल: कर्कटो[1] राजपटोल: कुलक.[2] पटु: । पटोल ॥
तोयपर्णी[3] राजवल्ली सुपर्वी[4] कारवेल्लकः ॥ कारला ॥
चक्राङ्गी वृषपर्णी[5] च दध्यार्ली[6] च सुदर्शना । सुदर्शना (पुडियाति ॥
अर्कपत्रा सुनन्दा[7] स्यादर्कमूला विषापहा ॥ ईशामूल (ईश्वरमूल) ॥
स्नुही स्नुक् च महावृक्षो वज्रवृक्षः[8] सुधा गुडा[9] । सिज ॥
शोभाञ्जनस्तीक्ष्ण[10]गन्धा शिग्रु[11] मूलकपर्य्यपि ॥ साजिना ॥
सुगन्धा[12] स्वादुगन्धाऽन्या मधुशिग्रु:[13] शुभाञ्जनः[14] । रक्तसाजिना ॥
प्रपौण्डरीकं चक्षुष्यं सितं श्रीपुष्पपुण्डरी[15] ॥ स्थलपद्म ॥
फेनः समुद्रफेनोऽब्धिकफश्चाम्भोरजो मलः[16] । समुद्रफेन ॥
वरुणस्तिक्तशाकश्च[16*] सेतु[17]वृक्षोऽम्भसांपतिः ॥ वरुण ॥
वैजयन्ती च तर्कारी जयन्ती विजया जया । जयन्ती ॥
समष्ठी तोयवृन्दश्च गण्डीरो [ऽम्बु][17*]मयूरकः ॥ महावाटि ॥
सालिश्च:[18] सितसारश्च जम्भलो[19] लोहमारकः । सालिश्चा ॥
मार्षी[20] विषघ्नी मत्स्याक्षी चक्राङ्गी हिलमोचिका ॥ हिश्चा शाक ॥
लाङ्गली शारदी तोयपिप्पली शकुलादनी । कौंचडाशाक[21] ॥
पीलुपर्णी घनरसो हस्तिपर्णी च मोरटः ॥ लता चडार[22] ॥
शीतद्रु:[23] सरल: साल्य:[24] क्षीरवान् क्षीर[25]मोरटः । क्षीरचडार[26] ॥
चक्रकालो महाकालः किम्पाकः काक[27]मर्दकः ॥ महाकाल० ॥
पयस्या सूर्यवल्ली च सितपर्ण्य[28]र्कपुष्पिका । एकलविरा ॥
गिरिवल्ली[29] महाश्वेता स्थूलपुष्पा सिता क्वचित् ॥ पर्वतीय अपराजिता ॥

---

1 H.I. वर्वशो. 2 A.B. कुशला. E बुशालो ŚK. credit Ratna. with कर्कशदल, कुलज,, वाजिमान्, लताफल, राजफल, वरतिक्त, अमृताफल 3 F.I. °वल्ली. 4 Γ. मधुवल्ली. 5 A.B.E.G J. वृष°. F. °कर्णी. 6 Γ. दध्यानी. 7 B. सनन्दा E. मि°. 8 A.J. वज्रवृष. B. वर्जविष. E. वर्जविष. 9 F. गुडा. 10 F. ŚK. कृष्ण°. 11 A.B सिग्रु 12 F. सुरङ्गा. ŚK I. सुरङ्गी. 13 ŚK. मधुलग्न.. 14 A.B.G J. सु°. 15 A.E °पण्डरी F.H. प्रपौ°...शीन .16 Γ.H. स्वाऍवजो मल I. स्वाऍवयोनि च. Γ.H.I. have प्रपौण्डरीर... after 419. 16* A.B.E. °सार°. 17 A.E स्योन°. B. मातो 17* H. ऽम्ब°. I. °मम्बू°. Others omit this line 18 F. सालीञ्च. 19 F.I चनूरो. G J जन्तुघ्न. 20 ŚK. मम्बी H. मषी. I. मारि°. 21 A.B E. omit मार्षी . 22 A.B.E.J. हस्तिकर्णपलाश. 23 E मीन°. G.J. पीन°. H I. सिन°. 24 E. शाल्य . 25 A.B.E. सारवान् क्षार°. 26 Γ. omits शीतद्रु..27 A.B.E. कास°. ●J. has 611-612 after this. 28 B E. °र्णी च. F. घनवल्य°. H.I. °पर्णी च घनवल्यर्क°. 29 Γ.H.I. °कर्णी.

ओष्ठी[1] रक्तफला बिम्बी तुण्डकेरी[2] च बिम्बिका । वेलाकुचा ॥
इक्ष्वाकुः कटुकालाबुस्तिक्ततुम्बी नृपा[3]त्मजा ॥ तितलाउ ॥
मत्स्याक्षी सुस्वरा[4] ब्राह्मी वयस्था ब्रह्मचारिणी । ब्राह्मी ॥
गण्डकाली[5] नमस्कारी समङ्गा खदिरे[6]त्यपि ॥ वराक्रान्ता ॥
सर्पकङ्कालिका वीक्ष्णा विषदंष्ट्रा विषापहा[7] । सापकाँकालि लता ॥
सर्प[8]सहा सर्पनामा सर्पाक्षी सर्पघातिनी ॥ सापकाँकालिर भेद ॥
गोधापदी तु सुवहा त्रिपदा हंसपद्यपि । गोहालीया[9] ॥
शुकाख्या स्याच्छुक[10]नासा शुकजिह्वा[11] शुकानना ॥ शुयाठुँठि ॥
वज्रपर्ण्य[12]स्थिसंहारो ग्रन्थिमान् कुलिशोऽमरः[13] । अयेव । हाड़जोड़ा ॥
मधुस्रवा हंसपादी त्रिपदी हंसपादवत्[14] ॥ हंसपादी ॥
सूचिपुष्पो हलीनश्च[15] जम्बुलः केतकीति च । केतकी ॥
करमर्दी[16] वनेक्षुद्रा कराम्लः[17] करमर्दकः[18] ॥ पाणि आला[19] (करन्द H) ॥
हस्तिकोलि र्गो[20]घण्टा घोण्टा स्याद्[21] बदरीच्छदः[22] । शेयाकुल[23](डोमा°)॥
परूषकं परूपं स्यात् किञ्चिन्नागदलोपमम् ॥ परूपा वृक्ष ॥
उत्तानकश्चाम्बुपत्रा जटिला शुक्लोच्चटा । उच्चटामूल ॥
`उच्चटा तु कुलिंगी* स्यात्सैवोक्ता कुक्कुटी कचित् ॥ श्वेतउच्चटामूल'[24] ॥
छत्रपत्रः शिवो[25] भूर्जो भूर्जपत्रः स्थिरच्छदः । भूर्जपत्र ॥
कुन्ततृणं[26] सुगन्धश्च तृणशम्भु[27] सुशीतलम्[28] ॥ नाकदोना (नागदना)॥

1 F.तुष्टि. 2 E तुण्डकेरा. F.तुण्डी°. I तुण्डि°. 3 F °म्बुजा. B तु या°. 4 F सुरसा. 5 ŚK. °कारी. I.गन्ध°. 6 F. खरिरी°. H.I. खदिरी 7 A.B.E.G.J. omit this line. H.I. have it after the next. 8 E. सूघ्य°. B. सुम्घ°. A. सुज्य. 9 A.B.E.G.J. omit this line. H.I. गोधावल्ली .. विदला (I. त्रिदला) 'हसपाद्यपि. 10 A.B.E. शुष्क°. 11 A.B.E. सुसक्षा च. H. I. शुकचञ्चु. 12 F. °दन्त्य°. H.I. ŚK. VŚ. °वन्ल्य°. 13 A. °रप. B.E. 'वस. 14 E. पादवित्. F. °पद्यपि. 15 F.J. हलिन°. I. हलिम°. 16 A B. °मर्दो. 17 A.B.C.I.J. वराम्ल. 18 A.B.E J. 'क. 19 A.B. पानिआमला 20 F. 'घोण्टा. I.'घण्टो. 21 A.G. घोटास्यो. 22 A. 'रिच्छदः. E. गिरि. 23 A.B.J. ग्रामवदरि. *I. कुलिङ्ग. 24 A.B.E.G J. omit उत्तानक..F. has मासी कृष्णजटा पेपी जटिला चक्रलोच्चटा. ŚK. credits Ratna. with the following synonyms of उच्चटा, *q.v.*, अम्बुपत्रा, जटिला, शुक्ला and उत्तानक. 25 A.B. शिवा. 26 A.B. कत्न°. F. ŚK. कत्तृणञ्च. H.I. दल°. 27 A. तृण सम्भु. B. °सम्भु. E. °सस्तु. F. तृण शीत°. H.I. °शून्यं. 28 G. °दम्.

वराह: कृष्णपिण्डारु:[1] कृष्णपिण्डी[2]तकस्तु स: । पिण्डरा ॥
पिण्डीतक: शुक्लपुष्प: पीतपुष्पस्तथापर: ॥ पिण्डराभेद ॥
मूले पत्रे वचाकारश्छत्राकश्छत्रपत्रक:[3] । [छातारिया विष] ॥
धूपक: स्याद्[4] भोजनको[4a] नदीभल्लातको[5] मत: ॥ [नदीभल्लातक] ॥
अर्शोघ्नी मुसली[6] ताली तालमूली खलिन्यपि[7] । तालमूली ॥
भृङ्गराज: केशराजो भृङ्ग: पत्तङ्ग[8]मार्कवौ ॥ भृङ्गराज ॥
धूस्तूरक[9]: शठो धूर्त उन्मत्त: कनकाह्वय: । धुतरा ॥
उत्तमा दुग्धिका युग्मफलोत्तम[10]फलिन्यपि ॥ चीरायी[11] ॥
प्रसारणी च गन्धाली भद्रकाली[12] कटम्भरा[13] । गाँधालि ॥
अजलोमा शिखी[14] केशी महा[15]ह्रस्वाग्रपर्ण्यपि[16] ॥ [केशी] ॥
अल्पकेशी तु गोलोमी भूतकेशी च केश्यपि । भूतकेशी ॥
नेत्रामयहरी चान्या कटुका पीतरोहिणी ॥ [पीत] कटुकी[17] ॥
अवाक्पुष्पी त्वध:पुष्पा[18] मङ्गल्यामरपुष्पिका[19] । हेठाहुलि[20] ॥
महाजम्बु[21] महापत्रा राजजम्बुर्बृहत्फला ॥ बड़जाम ॥
सूक्ष्म[22]कृष्णफला जम्बु दीर्घपत्रा च मध्यमा । कादा जाम ॥
भूमिजम्बु: काकजम्बु र्नादेयी[23] सित[24]वल्लरी ॥ भूमि जाम ॥
पाषाणभिदश्मभेद:[25] शिलाभेदोऽश्मभित्तथा । पाषाणभेदी ॥
कपाटचक्र[26] चक्राङ्गी[27] कपोटचक्र[28]श्मह्रत्[29] ॥कपाटतृशु(गु)रा(करडिया)॥
वृत्तादनी वृत्तरुहा वन्दाको[30] नीलवल्ल्यपि[31] । बाँदु ॥

---

1 F. पिण्डीर. H.I. पिण्डार 2 F. °रक°. E J. °पिण्डा°. 3 F. छत्रवृक्षो तृणश्छत्रोऽति-छत्रक कटु. I. छत्रातिछत्रक पटु. 4 A.B. वृक स्याभो°. E. विषकन्या°. 4[a] B. °कोन न°. 5 A.B.E. °की. F. omits the line. 6 F.I.J. °व°. 7 A.B E. गणोन्यपा. F. स्वसि°. I. खलीत्यपि. 8 B E मत्तङ्ग°. A. मर्त्तङ्गमार्कर I. पत्राङ्ग°. 9 A.B. धु°. 10 F. VŚ. दुग्धी फलोत्तमा. .H. °करिण्यसो. I. °करण्यसो. Text on ŚK. 11 A.B.E.G.J. omit the *line. H.I. have after this* कण्टकी स्यात(I. स्याम°)कन्दश्च शिखी सितशिव· खमी । खमी. See 593-594 *infra.* 12 F. °पर्णी 13 A.B.E J. कटुम्बरा. H. I. कटु°. 14 A.B. सिका. E. घीका. 15 F. °दु. 16 A B.E. प्रपर्ण्यपि. 17 F. omits the line. 18 F. °पुष्पी. 19 A. मधुरो(E °रा°)ष्पुर्पी B.मधुरापुष्पी. H मधुपुष्प्यपि. I.मधुपर्ण्यपि. 20 F.हेलपुष्पी. A.B.E. घोराहुली. 21 A.B.E.°जाम्बु 22 F. सूक्ष्म·. 23 A.B.°या. 24 F. ŚK. VŚ. शीतपल्लवा. G. शीन°. H.I. पीन°, and have after this line, वृक्षोन्नत: कर्णिकारो नकुचो निकुचो डहु· । डहुया ॥ =623,660 *infra*. 25 A.B.E. °भेदाश्ममभेदो. 26 F. VŚ. कवाटवक्र (VŚ. also °चक्रं). 27 F.VŚ.वराग्र.I.°ङ्ग. 28 F. VŚ. कवोडवक्र°. I.(VŚ. also) कपोत°. 29 A.E. °श्मभूत्. B. °श्मभूत्. F. °जित्. VŚ. °त्रजित् & °श्मभित्. 30 A.B.E.J. वलापि. I.°की. 31 B. °वल्लरि. A.E. वल्ल(ल्व)वि.

सालनः सालनिर्यासः सर्जः[1] सर्जरसस्तु सः ॥ धुना ॥
शोभाञ्जनस्य यद्बीजं तत् श्वेत[3]मरिचं तथा । साजिना बिच[4] ॥
व्रीडा[5] कुलाली चक्षुष्या कुम्भकारी कुलत्थिका[6] ॥ वनकुलत्थ ॥
तोयप्रसादनफलं कतकं द्रावणं तथा[7] । [निर्मलीफल] ॥
कासीसं[8] धातुकासीसं हरितं[9] तच्च लोहितम्[10] ॥ हिराकस ॥
द्वितीयं पुष्पकासीसमसितं[11]श्च सितञ्च तत् । पुष्पकाशीश ॥
सुवीरकं पार्वतेयं सौवीरं नीलमञ्जनम् ॥ सौवीराञ्जन ॥
स्रोतो[12]ऽञ्जनं नदीज[13]ञ्च कृष्णस्रोतो जयामलम्[14] । [स्रोतोञ्जन] ॥
तार्क्ष्यं शैलं नीलवर्णमञ्जनञ्च रसाञ्जनम्[15] ॥ रसाञ्जन ॥
दार्व्याः क्वाथोद्भवं चान्यत् कृत्रिमं तद्रसाञ्जनम्[16] । [रसाञ्जनभेद] ॥
गिरिमृद् गौरिकं धातू रक्तं लोहितमृत्तिका ॥ गिरि ॥
सुवर्णं गैरिकं चान्यत् सुरक्तं स्वर्णगैरिकम् । स्वर्णगिरि[17] ॥
माक्षिकं धातुमाक्षिकं तार्प्यं ताप्युत्थसंज्ञकम् ॥ धातुमाक्षिक[18] ॥
पाकशुक्ला शिलाधातुः कठिनी कर्कटिः[19] खटिः । खड़ि ॥
मूषा[20]तुत्थं कांस्य[21]नीलं तुत्थकं शिखिकण्ठ[22]वत् ॥ तुतिया ॥
अन्यत् कर्परिकातुत्थममृतासङ्गसंज्ञकम् । खपुरिया[23] ॥
हरितालमलं तालं वर्णकं नट[24]भूषणम् ॥ हरिताल ॥
गन्धको गन्धपाषाणः पामाघ्नश्च सुगन्धकः । गन्धक ॥
रक्तं मर्कटशीर्षं[25] तु हिङ्गुलं दारदो[26] रसः ॥ हिङ्गुल ॥
शिलाजत्वश्मजं शैलं शिलोत्थं च तथाद्रिजम्[27] । शिलाजतु ॥

---

1 A.B. सर्ज्यः सर्यं°. 2 A B. सो° or सो°. 3 A ततुस°. B. ततुतम°. 4 F.,I. & H. have after this प्रपोण्डरीक... & फेन समुद्र... 5 A. विड (B. विड°) फेलिनि. E. वीडफेलीलि. G.वूडिक°, F.VŚ.अवि. H.पीता. I.पीत°. 6 A.B.E.°त्थिता. 7 A B.E.J. omit the line, but ŚK VŚ. support it. 8 F.I. every where काशीश. 9 A.B. हारितं. E.हारिक्तं. 10 A.°च्छनासम°. B.चनासम. 11 B सुसाज. A.पुस।ज E.शुलाजं. I.सुसीत. The text of the two lines is supported by ŚK. and VŚ. 12 A. सैभा°. E. सोभा°. 13 A E. °य°. 14 °मुलं. E. °मूल. F. जलाञ्जन. H.I जयाजन. 15 A.E.°मन. 16 B. omits स्रोतोऽञ्जनं ....A.B.E J. put मूषातुत्थ...after this. 17 F. omits गिरिमृद् ...18 A.B. सुवर्णमाक्षिक. 19 F. कर्कडी. I.चखडी तथा. 20 A.E. मुसा°. F. घपातित्थ. 21 F. कास्यनि°. 22 H.°कण्ठवं. 23 F. omits अन्यत् ... 24 A B.E.G.J. कट°. 25 F.H.I. °शीर्षञ्च. 26 F. दरदो. 27 F....लमश्मजत्वथ चाद्रिक.

सौराष्ट्री मृत्तिका[1] मृत्स्ना काची[1a] च सित[2]पर्पटी ॥ सोराटिमाटि ॥
मनःशिला मनोज्ञा[3] च नैपाली कुलटी[4] शिला । मनःशिला ॥
अद्रिसारस्त्वयः शस्त्रं पिण्डं स्याल्लोह[5]मायसम् ॥ लोहा ॥
काला[6]यसं काल[7]लोहं रुक्मं[8] तत्तीक्ष्णमन्यथा । तीखा ॥
रक्तं वरिष्ठं[9] म्लेच्छास्यं[10] ताम्रं शुल्व[11]मुदुम्बरम् ॥ तामा ॥
नागं बहुमलं[12] चीनं पिष्टं योगेष्टसीसकम् । सीसा ॥
रङ्गं वङ्गञ्च कास्तीरं[13] मृदङ्गं[14] त्रपु पिच्चटम् ॥ राङ्ग ॥
सुवर्णरजतादन्यद् द्रव्यं[15] कुप्यमुदाहृतम् । ताम्रादि ॥
रुचकं कृष्णलवणमक्षं सौवर्चलञ्च तत् ॥ सौवर्चल लवण ॥
विड्गन्धं काललवणं विडं विड्लवणं तथा । विट् लवण ॥
सामुद्रं यत्तु लवणं त्रिकूटं कडक[16]ञ्च तत् ॥ बड़ कड़कचा ॥
उषं तथो[17]द्भिदं पाक्यं[18] लवणं पांशुजं पटु । पांशुलवण[19] ॥
रोमकं रोमलवणं पाश्चात्याकर[20]सम्भवम्[21] ॥ साम्भर लवण ॥
कपोतः[22] स्वर्जिका स्वर्जिः सुघ्नकश्च[23] सुवर्चिका । साचित्तार ॥
सिता शुक्लोपला शुक्ला शर्करा च सितोपला ॥ चिनि[24] ॥
मधु पुष्परसः क्षौद्रं मकरन्दश्च माक्षिकम् । मधु ॥
तुगाक्षीरी तुकाक्षीरी त्वक्क्षीरी पार्थिवी[25] तुगा[26] ॥ वंशलोचनाभेद ॥
स्याद् वंशरोचना वांशी तादृशी[27] वंशजा शुभा[28] । वंशलोचना ॥

1 I J. पार्वती. 1[a] A. B. E G. कासा. 2 A. सीत°. B. श्वासि°. F शीत°. F. पङ्क°. 3 B. I. °ह्वा. 4 F. I. कुनटी. 5 F. लोह°. 6 F. I. कृष्णा°. 7 F °लोह 8 A. B. I रूक्ष°. E. रुक्मामन्त°. 9 A. B. मरिष्ठ. E. J. मरिष्टं. 10 A B. E. °क्ष F. °स्य 11 A. सुल्ल°. B. सुल्य°. 12 F. महाबल. 13 A. B. किद्रिव. E. किस्विच. H. कच्चीर I. काश्टीर. 14 मृदन्का. E मृद्रचा. I. मृदङ्ग A. is pierced here. 15 A. °दन्यात् दन्य B. °जदात नातदन्य. F. कुच्य कुप्य°. 16 A. B. E. G. I. कटुक°. F. करव°. H. वटक°. 17 H. उप्मज तथो°. I. उप्णन्तयो ŚK. (*s.v.* पांशुजम्) औद्भिद. 18 F. पाच्य. 19 A B. E. G. J. omit उषं...20 A E. G. पश्चाशारश्च. B. स्वस्यकारम्भ°. H. °त्य कर°. 21 A. B. सम्भर. H. I. have after this lines 733-734, which are followed, in I., by सौभाग्य सुभग प्रोक्त धातुक टङ्कणोत्तम. 22 F. कापोत. 23 E. श्लक्ष्णको च. F. सर्जिका सर्जि स्वर्जका. H. धौघ्निका. 24 F. puts this after मधु.. 25 A. G. पार्थवी. B. पथवी. E. पार्थवि. 26 A. B. E G. तालक्षीरिका. 27 A. सादृपी. E माद्र(or दु)शी. B. °रोचना सिता दुरिस स च सभा. 28 F. ŚK. combine this line and the previous one into तुगाक्षीरी शुभा वांशी वंशजा वंशरो(लो)चना (which also I. has) and F. puts it before मधु...

वीरा पयस्या काकोली ध्वांक्षोली सित[1]पाक्यपि ॥ काकोली ॥
द्वितीया क्षीरकाकोली महावीरा सुकोल्यपि[2] । क्षीरकाकोली ॥
याज्ञिको[3] ह्रस्व[4]गर्भश्च बर्हिर्दर्भः कुथः कुशः ॥ कुश ॥
सूच्यग्रो[5] दर्भकस्तूल्लु (र्)[6] जूर्णाख्यश्च खरच्छदः । उलु । जुनघास ॥
इक्षवालिकेक्षुतुल्या स्यादनिक्षु[7]रिक्षुवालिका ॥ आनाखु[8] ॥
घायसेक्षुश्च काण्डेक्षुः काश[9]श्चामरपुष्पकः । काशिया ॥
कालङ्कत[10]श्चारिमर्दः कास[11]मर्दस्तु कर्कशः ॥ कालकासोंदा[12] ॥
पोटगलो वृहत्काशः काकेक्षुः स च खगाहः[13] । खागड़ा ॥
इषु काण्डः शरो बाणो मुञ्जस्तेजनगुन्द्रकौ ॥ [शर] ॥
इत्कटो बहुमूलश्च वाटी दीर्घः खरच्छदः[13a] । इकड़ ॥
क्षुद्रा घुलञ्चो[14] गोजिह्वा गुन्द्रा गुत्थो[15] गवेधुका ॥ देधान (गड़्गड़) ॥
कीटजा क्रिमिजा लाक्षा जतुका च गराधिका[16] । लाक्षा[17] ॥
कुमारजीवसंज्ञो य. स पुत्रञ्जीवको[18] द्रुमः ॥ जियाछ्रि गाछ ॥
पद्मोत्तमविकाशः स्यात् कुसुम्भः शरटस्तथा । कुसुमफुलेर गाछ[19] ॥
ऋक्षगन्धा सर्प[20]गन्धा ऋषिजाङ्गलक[21]स्तथा ॥ सर्पगन्धा वृक्ष[22] ॥
आस्फोतकः सुगन्धश्च[23] भूपलाशो विशल्यकृत् । विशाली (हापरमाली) ॥
भद्रा च मलपू फल्गुः काकोडुम्बरिका च सा ॥ डुमरी ॥
शिवी ब्रह्मी कचिच्छङ्खपुष्पी धूसरपत्रिका । शङ्खपुष्पी[23a] ॥
वीरतरु र्वीरवृक्षो वृहद्धान्यो[24] ऽश्मरीहरः[25] ॥ बड़घना[26] (बडचणाH.) ॥

1 F. VŚ. SK. शीत°. 2 A. E. सुककृसे(शो). B. सुकत्रिसो. H.I. °शुपाक्यसो. 3 A.B.E G.J. पाक्रिको 4 A.B E G. ह्रसुदर्भ°. H. I. ह्रस्वद°. 5 A. सुरवा. B. सुवर्दा. 6 I. सूच्यग्रस्तूच्चको दर्भो. F. सुसूर्यस्तूलुश्चोदर्भो. 7 F. °वालिका परा. 8 A.B E.J omit इक्षवालि°... ŚK. *s.v.* इक्षुतुल्या. 9 A.B.E. घास°. 10 A.B.E.G. कालान्तक कोरि(पि)मर्द°. 11 A I. काक°. 12 F. omits कालङ्कत...and H.I. have it after 464. 13 F.VŚ. खड्गक H. खड्गज. ŚK. खग्गड. 13a H.I. इकुटो(I. इक°) बहु ूल च (I. °लश्च) नाडी दीर्घखरच्छद ।. 14 F. क्षुत् घुलञ्चो. H. क्षुतघ्न पुंज. 15 F. गुल्म°. Text on ŚK. & VŚ. 16 ŚK & VŚ. also गरापिका & गवाधिका. F. गवायिका. H I. गवाटिका. Cf. गवाधिका Kn. 17 A B.E.G. omit पोटगलो.. 18 A.B.E.G. कुमारी जीवसञ्ज्ञोऽन्य सपुत्रो जीवको...H I. °य समुद्रो जी°. 19 A.B.E.J. omit पद्मोत्तम°...H.I. करट° for शरट°. 20 F. ऋष्य°. 21 F. °लिका. VŚ. ŚK. °लिकी 22 F. ऋषिजाङ्गला. 23 ŚK. (*s v.* भूपलाश.) आस्फोडक सुकल्कश्च...but VŚ. on the same word cites the line. A.B.E. omit it. I. आस्फोडक. 23a All except H.I. omit this line. 24 F. ŚK.H.I. बृहद्वातो. 25 A.B.E. °पुन or °पुन. H.I. रिपु. 26 F. देघान.

चिन्नको[1] व्रीहिभेदोऽपि गुणैः श्यामाकसन्निभः । चिना ॥
चणकोमातसी चौमी[2] रुद्रपत्नी सुवर्चला[3] ॥ ममन्या ॥
गर्मुटिका व्रीहिभेदो गर्मूच्छामाकरा (?) गुणै । [माडुया] ॥[4]
कालवृन्तस्ताम्रवृन्तः[5] कुलत्थश्च कुलत्थिका[6] ॥ कुरिथकलाइ ॥
आम्रो रसालश्चूतः स्यात् सहकारः सुगन्धवान् । आम्र[7] ॥
प्राचीनामलकं यत्तु पानीयामलकं हि तत् ॥ पानि आमला ॥
सरश्च दध्युत्तरकं[8] दधिस्नेहस्तु कद्वरम् । दधिसर ॥
हैयङ्गवीनं सरजं नवनीतञ्च मन्थजम्[8a] ॥ नुनी ॥
क्षीरं सद्यःप्रसूतायाः पेयूषं मलिनं घनम् । पेयूस[9] ॥
सप्तरात्रात् परं क्षीरमप्रसन्नं[10] च मोरटम् ॥ मोरट[11] ॥
दध्ना सह पयः पक्वं यत्तु सा दधिकूर्चिका । छेना ॥
तक्रेण पक्वं यत् क्षीरं सा भवेत् तक्रकूर्चिका ॥ तक्रछेना ॥
गोमयं जगलं गोविड् गोहन्नं[12] तच्च गोशकृत् । [गोबर] ॥
सुपर्णो गरुडस्तार्क्ष्यो वैनतेयः खगाधिपः ॥ गरुड़ ॥
शकुन्तो विहगः पक्षी विहंगो वि. खगोऽण्डजः । पक्षी ॥
मधुपो भ्रमरो भृंगो द्विरेफोऽलिस्तु षट्पदः ॥ भ्रमर ॥
कोकिलः परपुष्टश्च मत्ताख्यो[12a]ऽन्यभृतः पिकः । कोकिल[13] ॥
उलूकः[14] कौशिकः पेचः काकभीरुर्निशाचरः ॥ पेचा ॥
मयूरोऽहिरिपुर्बर्हो शिखी केकी शिखण्डिनि । मयूर[15] ॥
सारसः शतपत्रश्च दार्वाघाटश्च[16] लक्ष्मणः ॥ सारस ॥
कुलिङ्गः कलविङ्कश्च चटको वेश्मजोऽपरः । चटक ॥
कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः ॥ कुक्कुट ॥
मीनो वैसारिणो मत्स्यः पृथुरोमा झषोऽण्डजः । मत्स्य ॥
अश्वस्तुरङ्गमो वाजी तुरङ्गस्तुरगो हयः ॥ घोटक ॥

1 I. तिलको. All except H.I. omit this line. 2 A.B E.J.क्षामा. H क्षुमा. 3 A. B.E. सुवर्चिका. 4 A.B E G H.I.J omit गर्मुटिका . 5 F.°वृक्ष . 6 A.B. °त्थक . 7 F. omits आम्रो . 8 A E.J. दध्यन्त°. B. दध्यास्त°. 8a H.I. नवोद्धृतम् 9 A.B.J. सद्योदधि(?). 10 A J. मपन स. B. मपल स. E. पमल्ल स H I तत्प्र°. 11 A.B.E. रसाला. 12 ŚK.VŚ. also गोहल्ल. H. गोमल. I. गोहल्ल छगण गोविट् गोमय .. 12a I. मत्ताक्षो. 13 A.B E G J. omit गोमय.. 14 A.B.E उल्लूक. 15 A.B.G J. *abruptly end here.* 16 E. दार्वीघोटश्च.

वासन्तको द्वि[1]ककुदः करभोष्ट्रक्रमेलकाः[2] । उट् ॥
उक्षा गौ वृषभोऽनड्वानृषभः ककुद्मी वृषः ॥ वृष ॥
माहेयी सुरभी चासौ सौरभेयी च गौरिला । गाइ[2a] ॥
पोत्री दंष्ट्री किरिः कोलो वराहक्रोडशूकराः[3] ॥ शूकर ॥
शाखामृगः प्लवङ्गश्च मर्कटो वानरः कपिः । वानर ॥
वृषदंशो बिडालश्च[3a] मार्जारो मूषिकद्विषन्[4] ॥ बिराल ॥
शुनकः सारमेयः श्वा मृगदंशश्च कुक्कुरः । कुक्कुर ॥
गोमायुः क्रोष्टुकः क्रोष्टा शृगालो जम्बुकः शिवा ॥ शृगाल ॥
काको ध्वांक्षश्चात्मघोषो वायसो बलिभुग् [द्विकः[5]] । काक ॥
शयस्तु कृकलाकी च शरटः कृकलाशकः[6] ॥ काँक्लास ॥
मनुजः पुम्पो मर्त्यो मानवश्च नरः[7] पुमान् । पुरुष ॥
अङ्गना ललिता योषित् स्त्री नारी प्रमदाबला ॥ स्त्री ॥
आलिङ्गनं परिष्वङ्ग आश्लेष उपगूहनम् । आलिङ्गन ॥
व्यवायो ग्राम्यधर्मश्च मैथुनं सुरतं रतम् ॥ मैथुन ॥
गुर्वी चापन्नसत्त्वा स्यादन्तर्वत्नी च गर्भिणी । गर्भिणी ॥
कायो देहः शरीरञ्च गात्रं क्षेत्रं[8] तनुर्वपुः ॥ शरीर ॥
उत्तमाङ्गं शिरः शीर्षं कमुण्डो मूर्धमस्तकम् । मस्तक ॥
मुखास्यं लपनं तुण्डं वक्त्रं वदनमाननम् ॥ मुख ॥
लोचनं प्रेक्षणं चक्षुर्नेत्रं नयनमक्षि दृक् । नयन ॥
मेढ्रं शेफो ध्वजो लिङ्गं लाङ्गुलं शिश्नसाधनम् ॥ लिङ्ग ॥
मुष्कमण्डमपानञ्च वृषणं फलकोषकम् । [मुष्क] ॥
गुह्योपस्थमपत्यावाध्वा योनि प्रजननं भगम् ॥ भग ॥
आयतनं त्वधिष्ठानमाशयः स्थानमाश्रयः । स्थान ॥
समीपनिकटाभ्याससमर्यान्तिकसन्निधि[9] ॥ समीप ॥
संस्तरः प्रस्तरः शय्या रचिता वल्कलादिभिः । शय्या ॥
वर्चः विट्टं पुरीषो विड् विष्ठोच्चारः[10] शकृन्मलम् ॥ विष्ठा ॥
लोहितं रुधिरं रक्तमसृगास्रञ्च शोणितम् । रक्त ॥

1 E ध्धि°. 2 E. °लिका. 2a I. has after this: लुलापो महिषो वाहद्विषत्कासरसैरिभा । महिष ॥ 3 E. पोत्री दष्टिवेलि कोला वराह क्रोडशूकर. 3a E. विरा°. 4 E.I. °द्विप. 5 E.H.I द्विज 6 H.. .प्रचनाकी च सरट कृकलासक । 7 H. नामर (ना नर ?). 8 E क्षेत्र. 9 E °धि. 10 E. °र.

पललञ्च पललं मांसं क्रव्यं पिशितमामिषम् ॥ मांस[1] ॥
भैषज्यं भेषजं चायुर्द्रव्यमौषधमौषधी[2] । औषध ॥
चिकित्सितं प्रतीकारश्चिकित्सा च भिषग्जितम्[3] ॥ चिकित्सा ॥
निष्णातः कुशलोऽभिज्ञः[3a] प्रवीणो निपुणः कृती । कुशल[4] ॥
गोष्ठी संसत् सभास्थानं समाजः परिषत् सदः ॥ सभा ॥
सदृक्षं[5] सन्निभं तुल्यं समानं सदृशं समम् । समान ॥
भूयोऽतिप्रचुरं भूरि प्रभूतं बहुलं बहु ॥ विस्तर[6] ॥
कोष्णं कवोष्णं मन्दोष्णं कदुष्णं किञ्चिदुष्णकम् । किञ्चिदुष्ण ॥
जग्धिः प्रत्यवसानञ्च भक्षणं भोजनाशनम् ॥ भोजन ॥
छर्दनोल्लेखनं[7] छर्दि वमनं वमथुर्वमिः । वमन ॥
प्रस्कन्दनं[8] विरेकश्च रेचनञ्च विरेचनम् ॥ रेचन ॥
सम्मार्जनञ्च संशुद्धिः संशोधनविशोधने । सशुद्धि ॥
वस्त्रमाच्छादनं चेलं वासो वसनमंशुकम् ॥ वस्त्र[10] ॥
रिक्थमृक्थं वसु[11] द्रव्यं द्रविणं विभवो धनम् । धन[12] ॥
अरण्यमटवी कक्षं विपिनं काननं वनम् ॥ वन ॥
भूरुहः पादपो वृक्षस्तरुः शाखी द्रुमोऽङ्घ्रिपः । वृक्ष ॥
महीधरोऽचलः शैलो नगोऽद्रिः पर्वतो गिरिः ॥ पर्वत ॥
पाषाणः[12a] प्रस्तरो ग्रावा दृशदश्मोपलः[13] शिला । प्रस्तर ॥
उदधिर्जलधिश्चाब्धिः समुद्रः सागरोऽर्णवः ॥ समुद्र ॥
मन्दाकिनी जाह्नवी च गङ्गा सुर[14]सरिद्वरा । गङ्गा ॥
व्योमान्तरीक्षमाकाशं गगनं खं वियन्नभः ॥ आकाश ॥
तुषारः स्यादवश्यायः प्रालेयं तुहिनं हिमम् । हिम ॥
छिद्रं निर्व्यथनं रन्ध्रं शुषिरं विवरं बिलम् ॥ गर्त ॥
सङ्गरः समरो युद्धं संग्रामो रणमाहव. । रण ॥
सततं सन्ततजस्रं नित्यानवरतानिशम् ॥ नित्य ॥
सत्वरं त्वरितं तूर्णं शीघ्रं क्षिप्रमरं द्रुतम् । शीघ्र ॥

---

1 F. omits सुपर्णो गरुड°...2 F.I. °धि. 3 E.I. °ता. H. भिषग्गिता. 3a I. विज्ञ. 4 H. विस्तर. 5 E सदृङ्ग. 6 F H. omit निष्णातः... 7 F. वान्तिरुल्ले°. 8 E. °स्य° or °क्ष°.H.°स्य°. 9 E I. सस°. 10 E. has सम्मार्जन°.... after कोष्ण...F. omits वस्त्र°... 11 H.स्वद्रव्य. 12 E.F. omit this line. 12a E. पार्षण. 13 E. °ल. 14 E. सुर°.

स्रस्तं ध्वस्तं तथा भ्रष्टं स्खलितं[1] गलितं च्युतम् ॥ भ्रष्ट ॥
अनुक्षण[2]मनुपदं सद्यः सपदि तत्क्षणम् । सद्य ॥
घोरं प्रतिभयं भीष्मं दारुणं च भयानकम् ॥ भयानक ॥
दुरितं पातकं पापमेनः पाप्माथ किल्बिषम् । पाप[3] ॥
आतङ्को रुगदो रोगो विकारो व्याधिरामयः ॥ रोग ॥
शूलं रुग्वेदना चार्तिः पीडा तोदो[4] रुजा व्यथा । पीडाभेद ॥
निसूदनं निघातश्च[5] मारणञ्च निवारणम् ॥ मारण ॥
भक्तिः परीष्टिः शुश्रूषा सेवोपास्तिरुपासना । भक्ति ॥
मोक्षोऽपवर्गः कैवल्यं मुक्तिर्निःश्रेयसा[6]मृतम् ॥ मोक्ष ॥
उक्तिर्वाग्वचनं[7] वाणी वचो गीश्च सरस्वती । वाणी ॥
ईशानस्त्र्यम्बको रुद्रः पिनाकी शङ्करो हरः ॥ शिव ॥
विष्णु कृष्णो हरिः शौरि र्माधवः केशवोऽच्युतः । विष्णु ॥
ब्रह्मा वेधा विरिञ्चिः स्यात् स्वयम्भूः कः पितामहः ॥ ब्रह्मा ॥
विधाता विश्वसृक् स्रष्टा ब्रह्मा दक्ष प्रजापतिः । विधि ॥
नासत्यावश्विनौ तौ[8] च दस्रौ देवचिकित्सकौ ॥ [अश्विनीकुमार] ॥
पर्जन्यो वासवो वज्री शक्रश्चेन्द्रः शतक्रतुः । इन्द्र ॥
धन्वन्तरि र्दिवोदासः काशीराजोऽमृतोद्भवः ॥ धन्वन्तरि ॥
इन्दुश्चन्द्रः शशी सोमः शशाङ्कश्चन्द्रमा विधुः । चन्द्र ॥
आदित्यस्तरणि र्ब्रध्नः सूर्योऽर्कः सविता रविः ॥ सूर्य ॥
धर्मराजः कृतान्तश्च यमो वैवस्वतोऽन्तकः । यम ॥
देवता दैवतं देवो विबुधस्त्वमरः सुरः ॥ देवता ॥
दानवो दनुजो दैत्योऽमरारि[8a]रसुरस्तथा । असुर ॥
राक्षसो नैरृतो रक्षो यातुधानो निशाचर ॥ राक्षस[9] ॥
रक्षःपिशाच[10]भूताद्यै रभिषङ्गोऽभिध[11]र्षणम् । अभिषङ्ग ॥
यन्त्र[12]पीडादिमन्त्राद्यै रभिचारोऽव[13]पीडनम् ॥ अभिचार ॥
दुःखाव[14]धारणं क्रोधादभिशापो द्विजातिभिः । अभिशाप ॥
कल्याणं मङ्गलं क्षेमं शश्व[15] शर्म शिवं शुभम् ॥ कल्याण ॥

1 E.°लन. 2 E H.I.°ण स्यादनुपद...3 F. omits अरण्यमटवी...4 E.I भेदो. 5 H.निषदन विघात च. 6 E.I.°सो°. 7 E I °णी. 8 E. °विश्विननौ I... दस्रौ तौ च. 8a I देवारि°. 9 F. omits निसूदन...10 F.यक्षपं°. 11 E.I.°म°. 12 F.यन्तु. 13 F.°न्य°. 14 E.°ति°. 15 F.शात.

श्लोकपाटैरितश्चोर्ध्वं

वृद्धिः स्याद् बोधिनी प्रिया । वृद्धि ॥

पुरोद्भवा महामेदा महामेद ॥

[मेदा स्यान्][1] मेदकोद्भवा ॥ मेद ॥

वृषश्चर्षभको[2] वीर ऋषभक ॥

कूर्चशीर्षस्तु[3] जीवकः । जीवक ॥

ऋद्धिः प्राणप्रदा वृष्या ऋद्धि ॥

वेणुर्वंशश्च मस्कर ॥ बाँश ॥

बन्धुजीवश्च बन्धुको बाँधुली ॥

वह्निनामा च चित्रकः । चिता ॥

पारिभद्रः पारिजात पालिधा ॥

कार्पासः पटदोऽम्बरः ॥ कार्पास ॥

अङ्कोठो[4] वामनोऽङ्कोलः [आँकड़ा] ॥

काकजङ्घा कृपीवल.[5] । केउआठेङ्गा ॥

कत्तृणं ध्यामकं दग्धं[6] गन्धतृण ॥

पिङ्गा शीतशिव शमी ॥ शमीवृक्ष ॥

स्यन्दनस्तिनिशो नेमि- रथवृक्ष ॥

रक्षीवस्त्वक्षिकोसुक[7] । आउच गाछ ॥

सर्जे साल[8] शङ्कुवृक्षो शाल ॥

गोजिह्वा दार्वि[9] रत्रिका ॥ चाटुया ॥

त्रियष्टिः[10] पर्पटस्तिक्त क्षेतपापड़ा ॥

काकमाची तु त्रायसी । काकमाची । काडाञ्चि ॥

चुक्रिका तु कुचाङ्गेरी चुकापालङ्ग ॥

चाङ्गेरी चाम्ललोणिका[11] ॥ आमरुली ॥

पिशाचवृक्ष शाखोट- साहड़ा ॥

स्ताम्बुली नागवल्लिका[12] । पान ॥

---

1 H मेद स्या°. E मेदल्या F. मदल्या 2 E I वृपभश्चर्पको 3 E °श्च F.°न्तु 4 F. °टो. I. °चो 5 E.H.I प्रदीपन. 6 E. जदग्ध. F VŚ दुग्ध. H. दश्र 7 E नेमी श्रस्त्वी-वस्तक्षिकोऽम्रवक. H नेमी I. नेमी अस्त्वीव .. F omits रक्षीव° See Mukta. 15.34. 8 F.H शाल 9 F. दार्वी°. 10 H त्रिगन्धि 11 F.°रो°. 12 F. has this line between खरपुष्पो मरुवक & वृक्षोत्पल कर्णिकार

| | |
|---|---|
| जीवशाक[1]स्तु जीवन्ती | जीवन्ती ॥ |
| वितुन्नं सुनिषन्नकम् ॥ | सुपुनि ॥ |
| गोशीर्षकं द्रोणपुष्पी | द्रोणपुष्पी (घलकसी)॥ |
| सिन्दूरं नागजं स्मृतम् । | सिन्दूर ॥ |
| अम्लोटको[2]ऽश्मन्तकः स्याद् | [अम्लकुचाइ] ॥ |
| ज्येष्ठी तु गृहगोधिका ॥ | टिक्टिकि ॥ |
| इन्दीवरं कर्णपूरं | कानड ॥ |
| श्रीहस्तिनी कुरुण्टिका । | हातिशुण्डा ॥ |
| वास्तुकं टङ्कदेशोत्थं | टोकरया (टाँक्वास्तुक)॥ |
| चिल्ली स्याद् गौडवास्तुकम् ॥ | वथुया ॥ |
| दुग्धिका राजघृतकः[3] | दुधिया ॥ |
| क्षुरकश्चित्र[4]पर्णिका । | हाक्षियाति[5] ॥ |
| खरपुष्पो मरुतको | मरुया ॥ |
| ध्यामो दमनकस्तथा ॥ | दना ॥ |
| अगस्ति वङ्गसेनश्च | वागशना ॥ |
| शुषा स्यात् कासमर्दकः । | कालकासुन्दा ॥ |
| वोथा[6]लिका (? जगन्धा) च | बोथडाती ॥ |
| वृहद्व ञ्जी(?) तु लोणिका[7] ॥ | लुनिञा ॥ |
| वृक्षोत्पलः कर्णिकार[8] | स्थलपद्म ॥ |
| कुञ्जको[9] वहुकण्टकः । | कुब्जपुष्प (काठकुचाइ I)॥ |
| मालती सुमना जाति- | जार्ती ॥ |
| र्वरलब्ध[10]स्तु चम्पकः ॥ | चाँपा ॥ |
| नन्द्या[11]वर्तस्तु तगर | टगर ॥ |
| आम्लानीकः[12] कुरण्टकः । | पीतझिण्टि ॥ |
| कुन्दो माघ्यः शुक्लपुष्पो | कुन्द ॥ |
| वकुलः सिंहकेशरः ॥ | वकुल ॥ |

1 E. °सारा तु I. °मारन्तु. 2 I. अक्षोटको. E.I. °श्मशान्त 3 I. °क्षवक 4 E.I. चित्र°. 5 E. काठकुडाइ. F. omits इन्दीवर . 6 H. रोन्या°. I. वोला°. 7 F. omits ध्यामो दमनक°...8 H.I. omit वृक्षोत्°...here, but have it after 414. 9 E I. कुण्वो. H कुब्जो. 10 F. °वर्ण°. 11 E. नाना( I.नन्दा )वर्नस्तु टगर. H. नन्दा°. 12 E.H.I. अम्लानस्तु.

| | | |
|---|---|---|
| मधुराम्लफलश्च.रु:[1] | | विडर [रेफल] ॥ |
| | पियालश्च प्रियालक:[2] । | पियाल ॥ |
| वनमल्ली महास्फोता | | वनमाली ॥ |
| | सिद्धवृक्षस्तु सिध्रक:[3] ॥ | [4]त्रिकण्टक सिज (?) ॥ |
| लशुनस्तु रसोनोऽन्यो | | रसुन ॥ |
| | बृहत्पत्रस्तु गृञ्जन:[5] । | लशुनभेद ॥ |
| तथा क्षीर[6]पलाण्डुश्च | | पेँयाज ॥ |
| | पलाण्डु (र्) लोहितोऽपर:[7] ॥ | [लालपेँयाज] ॥ |
| सेफालिका रक्तवृन्ता | | सिहुलि ॥ |
| | जीवन्ती क्षयनाशिनी । | जीवन्ती[8] ॥ |
| वज्रकर्ण:[9] खण्डकर्णो | | घाटुकान (आटुकान I.)॥ |
| | विशल्यावर्त्तिनीति च ॥ | वारवेला ॥ |
| ओड्रपुष्पं जवापुष्पम् | | जवाफुल |
| | अकुटोऽर्तगलो मत: । | आगड्फल[10] ॥ |
| सीहघ्नी शरपुंखा च[11] | | शरपुँखा ॥ |
| | नीली स्यान्नीलपत्रिका[12] ॥ | नीली ॥ |
| त्वग्वराङ्गं त्वचं चोचं | | गुड़त्वक् ॥ |
| | जतुकं[13] हिङ्गु रामठम् । | हिङ्ग ॥ |
| तालीशपत्रं तालीश- | | तालिपपत्र ॥ |
| | [मेरका[14]] होगलस्तृणम् ॥ | होगल ( हैचाल I. ) ॥ |
| आशीत: स्यादाशीतश्चो | | अहलु[15](अहिलुका) ॥ |
| | हरिमन्थोऽतिमुक्तक:[16] । | माधवलता ॥ |
| घण्टारवा[17] शणपुष्पी | | [झुनझुनिआ] ॥ |
| | कुम्भाटश्चावटी[18]लता ॥ | कुम्भाडु ॥ |

1 ŚK.VS. *आर* *q v.* I. Bengali name=विडलगाटर. 2 E. पिलक. I. प्रियालश्च पियालक. 3 H. द्ध° I. °वा. 4 E I. त्रिकण्टक सिज ( I. having also सिध्रक ॥०॥ before this ). 5 E गु°. H.I. कुजल. 6 E I. क्षीव°. 7 H. omits पलाण्डु...8 F. omits मधुराम्लफल°....9 E H. °कर्ण. I. वज्रकर्ण. F ...खण्डनीलो. 10 E.I. अर्द्धटोऽर्गलो (E. अर्तिगला) मत ॥ आगट ॥ 11 F. omits विशल्या°..12 F. नील. स्या°..E.I. °पुष्पिका. 13 F ŚK. जन्तुघ्न. 14 E. °श मेचगा. F. °श मवका. H. एकचा. I. मेकचा. 15 'अहिल्लक इति स्याते पुष्पवृक्षविशेषे' VS. 16 F. omits आशीत ...and H. हरिमथो. 17 E.घोषटा-रवा. 18 E. श्यावती.

नीपो महाकदम्बोऽपि[1] [ कदमगाछ ] ॥
रक्तपुष्पस्तु दाडिमः । दाडिम
मृद्धिका गोस्तनी द्राक्षा द्राक्षा ॥
भव्यं कर्मफलं तथा[2] ॥ कामराङ्गा ॥
चिञ्चाम्लिका तिन्तिडीका[3] तेँतलि ॥
लकुचो लिकुचो डहु[4] । डहु ॥
रम्भाख्या कदली मोचा कदली ॥
तालः स्यात्तृणराजकः[5] ॥ तालवृक्ष ॥
खपुरः[6] क्रमुकः[7] पूग सुपारी ॥
श्यामलं लवलीफलम्[8] । शीरआमला (?) ॥
ऐरावतं स्यात् कुद्दाल[9] एलाकरवीर ॥
सौवीरं बदरं महत् ॥ बृहत् कोली ॥
शृगालकोली कर्कन्धु सियाकोलि ॥
वैराग्ल[10] चाम्ल[11]वेतसम् । अम्लवेतस ॥
आम्रातको वर्षपाकी आमड़ा ॥
दधित्थश्च कपित्थकः ॥ कयेत् वेल ॥
[12]स्थलकन्दोऽम्लम्यकन्द वन ओलकचु ॥
स्थल[13]पद्मस्तु माणक । माण ॥
ओल्ल[14] कन्दः शूरणश्च ओल ॥
[15]केचुका केचुकं तथा ॥ कचु ॥
शालूकमौत्पल कन्द[16] शालुक ॥
मृणालं पद्ममूलकम् । मृणाल ॥
पद्मकन्दो बिस-
[17]न्तेषां नालं पुष्पादिबन्धनम् ॥

---

1 F. omits कुम्भाट 2 F. omits भव्य. 3 F. अम्लिका तिन्तिडी चिञ्चा. 4 E. ताक्षोस्तवर्णकोलिको H. I. omit here लकुचा..., but H. has it after भूमिजम्बु ...and I. after 668 5 E I. °खर्जूर 6 E °पु° 7 F ह्रस्वक 8 F करीर मरुज फलम्. H श्यामल नवमीफल. 9 E I. कु°. F. बदरी कुवली कोल. 10 E वराम्ल SK. वराङ्गी. H.I. have before it बदरी कुवल कोल ( I. °लि ). 11 E °म्बु° 12 E ( margin ) स्थूल°. E H. वालकन्दो महाकन्द ।, which I has before स्थलकन्दो ..13 E H I. महा°. 14 F. °लक°. 15 F. पेचुका केपुकास्तथा । आर्द्रक शृङ्गवेर स्यात्. H. केवुका केमुवन्तथा ॥ केउ ॥ I. केवुका केवुक तथा ॥ कँडा॥. 16 F. कन्द उत्पल. 17 E I. °स्ते°.

कर्णिका पर्णिका[1] मध्यं
किञ्जल्कः पद्मकेशरः[2] ।
चिञ्चोटकोऽङ्क[3]लोड्यश्च चिञ्चाउ[4] ॥
शूलघ्नं[5] तुम्बुरु स्मृतम् ॥
क्रौञ्चादनं घेञ्चुलिका[6] घेँचु ॥
कशेरुश्च[7] कशेरुका । केशुर ॥
कलायस्त्रिपुटस्त्रपुसः[8] मटर ॥
सतील[9]श्चातिवर्तुलः ॥ बाटुला कलाय ॥
चणको हरिमन्थश्च बुट ॥
कोरदूपश्च कोद्रवः । कोदो ॥
राजमाषो लसान्द्रः[10] स्याद् बरवटी ॥
उद्दालो[11] वनकोद्रवः ॥ वन कोदो ॥
श्वेतशिम्ब[12]स्तु निष्पावः सादा शिम ॥
काकाण्ड[13] कृष्णशिम्बिका । काल शिम ॥
कृष्णमुद्गश्च वासन्तः कृष्णमुग ॥
पीतमुद्गस्तु शारद ॥ सोणामुग ॥
श्यामाकस्तृणबीजः[14] स्याद् शाड ॥
व्रीहिराशुश्च पाटलः । आशुधान्य ॥
जुर्णाह्वा जोम्भुला जूर्णा[15] देवधान्य ॥
कुल्माषा कुहविल्लका. ॥ कुल्माष[16] ॥
प्रियङ्गुः कङ्गुका कङ्ग- कांग [काङ्गनि धान] ॥
मुद्गष्टको मपष्टक । वनमुग ॥
नीवार ओडिका ओडी उड़ी ॥
आशुव्रीहि(ः) प्रसादिका ॥ घोरोधान्य ॥
आढकी तुवरी तद्वद् टोडरी ॥
वन्या सा महती भवेत् । घनटोडरी ॥

---

1 I. कर्णिका. 2 F. omits ll. 676-680 3 E. ऽड्गु°. I ऽङ्ग°. H. omits 677-681. 4 F. चेनडा. 5 E शूघनं. I. omits 682. 6 E I. क्रोञ्चादक घिञ्चुरुका H पिंचुलिका. 7 E. VS. कषेरु. 8 E °स्त्रपु. 9 F. VS सतिन°. H. °न° 10 E. तिसान्त. I. तिमान्द्र. 11 F. कु°. 12 F. SK. °शिम्बी. 13 F. काकन्ती. SK. काकाण्डी 14 E I. °बीद. H. °जीर 15 E. दूर्णा. 16 वनकुल्थ SK ,VS.

अङ्कुरितं विरूढन्तु — अङ्कुरित ॥
पुलाकस्तुच्छधान्यकम्॥ — आगड़ा ॥
सुखाशः शीर्णवृन्तः स्यात् — शोंशा ॥
त्रपुषी त्रपुसन्तथा । — फुटी ॥
तुम्बी पिण्ड[2]फलालाबु — [लाउ] ॥
कर्कटाद्यस्तु शान्तनुः[3] ॥ — [ काँकुड़ गाछ ] ॥
कर्कारस्तु कलिङ्गक[4]- — खडया ॥
श्चेल(ः)सोऽल्प(ः)प्रमाणतः[5] । — चेलना (चेला I.) ॥
एर्वारुकं कर्कटिका — काँकोड़ि ॥
चिला गोडुम्बिका तथा ॥ — गोडमी ॥
कुष्माण्डकः पुष्पफल — कुष्माण्ड ॥
शष्पं बालतृणं मतम् । — घास ॥
निवृतन्तु परिक्षिप्तं[6]
प्राप्तं [प्रणिहितं] मतम् ।
पारदस्तु रसः सूतः — पारद ॥
अभ्रं व्योमाप्यमभ्रकम् । — अभ्र[8] ॥
रजतं रूप्यकं तारं — रूपा ॥
[रीतिकार][9]स्तु पित्तलम् ॥ — पित्तल ॥
हवुषा [ विपुषा विस्रा[10]] — हवुष ॥
पुष्पकं रीतिकामलम् ।
पत्रोर्णं धौतकौषेयं — पत्री ॥
कौशेयं कोषकारजम् ॥ — कोशियार ॥
सेवनं सीवनं स्यूतं — सिञनी ॥
गाङ्गेष्ठी[11] कटशर्करा[12] । — गोशिक [नाटा] ॥
संवाहनं मर्दनञ्च — मर्दन ॥
वीरभद्रञ्च वीरणम् ॥ — वेणा ॥

---

1 E. प्र°. I पू°. 2 E.°ण्ड°. 3 E H.I. कुक्कुटाख्यस्तु सान्तमु (A. सान्तथ). Text on ŚK. & VS. 4 F. omits पीतमुद्गस्तु ..5 E. चेलालो (°नो ŚK) ल्पप्रमाणक. 6 E नुवृतन्तु परित्यक्त. H. निवृतन्तु . I. परित्यक. 7 E H प्रलभित. I. ग्लु पल°. 8 F. omits चित्रा गोडुम्बिका...9 E.I नारीतार(न्तु E.). F. रीतिनार°. H. नारीभा° 10 E विस्वा निस्वा. H.I. विवुषा विस्वा. 11 L. ग°. 12 E. प°.

| | |
|---|---|
| या[व]कः स्यादलक्तकस्तु[1] | आलता ॥ |
| ... .. ... .. | |
| उपकः स्यादुपाचार[2](प) | चारमाटी ॥ |
| टङ्कणः स्वर्ण[3]पाचकः[4] ॥ | सोहागा[4] ॥ |
| कोकरलं कोलवं मूटा[5] (?) | घरटी ॥ |
| वाजिनां[6] ताडनी कषा । | चाबुक ॥ |
| शिविका याप्ययानं स्याद् | झापान ॥ |
| अङ्गारोऽलातमुल्मुकम ॥ | अंगार ॥ |
| मृगेन्द्रः केशरी सिंहः | सिंह ॥ |
| खड्गः[7] खड्गी तु गण्डकः । | गण्डार ॥ |
| अच्छान्ङभल्लभालूकाः | भालुक ॥ |
| सरमा कुक्कुरी शुनी[8] ॥ | शुनी ॥ |
| ईहामृगो वृकः कोकः | कोक ॥ |
| कर्करेटुः करेटुकः । | कर्कटीया ॥ |
| एणः कृष्णः कृष्णसारः | कृष्णसार ॥ |
| भामस्तु हरिणस्तथा ॥ | हरिण ॥ |
| तद्वदरः कुरङ्गोऽन्य. | कुरङ्ग ॥ |
| पृषतो बिन्दुचित्रकः । | चित्रहरिण ॥ |
| जतुका चर्मचटिका | चामचटा (चामचिका)॥ |
| मूषकश्चाखुरुन्दुरुः ॥ | उन्दुर ॥ |
| कलभः करिणां पोतः | हातिछा ॥ |
| किशोरो वाजिनां शिशुः । | घोड़ाछा ॥ |
| अश्वतरो वेगसरो[10] | गर्द्दभजात अश्व ॥ |
| गर्द्दभो रासभः खरः ॥ | गर्द्दभ ॥ |

1 H. यावदस्यादलत्तव. One *pāda* appears to have been lost after this (or after मवाहन etc., acording to H.), although the Mss. bear no trace, 2 F उपमक स्याद् वनाक्षार and places this and the next *pāda* after कौम्भं सर्पि°.. 3 E. °णस्त स्व°. 4 H.I. omit टङ्कण etc. here, but have उपक..स्वर्णपाचक: । मोहगा ॥ after 450. 5 E. मूडा. H. कोखल कोलए मूटा ॥ मोट ॥ 6 E. वाजनी. 7 E. खड्कु. 8 E. सुरी. 9 E. सुप्त°. 10 E.I. °सा°.

| | | |
|---|---|---|
| वस्तोऽजश्छगलश्छागो | | छागल ॥ |
| | वस्ती छागी छगल्यजा । | छागी ॥ |
| घोटिकाश्वा तु वडवा | | घोड़ी ॥ |
| | मेढ़ः[1]पुच्छस्तथैडकः ॥ | इड़िक ॥ |
| कर्कटकः कुलीरः स्यात् | | काकुड़ी ॥ |
| | कूर्मः स्यात कच्छपो डुलिः[2] । | काछिम ॥ |
| शिशुमारश्च ुलकी[3] च | | शुशुर ॥ |
| | नक्रः कुम्भीर उच्यते ॥ | कुम्भीर ॥ |
| मकरो वेणुमेदश्च (?) | | मगरकुम्भीरे ॥ |
| | भेकमण्डू[4]कदर्दुराः | भेक ॥ |
| शुक्तिः समुद्रमण्डू[4]की | | शुक्ति ॥ |
| | कपर्दश्च वराटकः ॥ | कड़ा ॥ |
| मौक्तिकं मुक्तिका मुक्ता | | मुक्ता ॥ |
| | प्रवालो विद्रुमो मत. । | पला ॥ |
| चक्रवाको रथाङ्गाह्व- | | चक्रवाक ॥ |
| | श्चित्रपक्षः कपिञ्जलः ॥ | गौरतित्तिर ॥ |
| शशयुश्च महाश्येन[5] | | सयचान ॥ |
| | उत्क्रोशो मत्स्यनाशनः । | कोपि (माछरासा I.) ॥ |
| नक्रमीनश्चिलिचिमो | | वालिगड़ा ॥ |
| | वृहन्मत्स्योऽब्धिजस्तिमिः ॥ | वृहन्मत्स्य ॥ |
| शिखण्डिनी मयूरी च | | मयूरी |
| | बलाका बिसकण्ठिका । | बगी ॥ |
| क्रुङ्[ङु][6] क्रुञ्च इति स्मृतः | | |
| | [कह्वो][7] बक उदाहृतः ॥ | बक ॥ |
| जलरङ्क[8]श्च दात्यूहः | | डाहुक ॥ |
| | कादम्बः कलहंसकः | राजहाँस ॥ |
| राजरश्ची स्मृतश्चासो | | टासकणा ॥ |
| | भासः स्याद् गोष्ठ[9]कुक्कुटः ॥ | |

1 E.I. मेढ°. H मेढ़°. 2 E °ली:°. 3 H. चुलूकी. 4 E.H. °ण्डु°. 5 H. दाशयुश्च महास्योन. 6 E. क्रू°. 7 E. कन्दो कव H I कन्दो. Cf. Amara, क्रुङ् क्रौञ्चोऽथ बकः कह्वः. 8 E.I. °वङ्क° (or °रङ्क°). 9 I. भासस्याद्गोष्ट°.

रूरुक (?) वालो (?) भरद्वाजो[1] भारद्द ॥
वरिष्ठ[2]स्तित्तिरिः स्मृतः ।
सारङ्गश्चातकस्तोक हापानिया ॥
सुग्रहा[3] पीतमस्तक ॥ बाबइ ॥
वर्तिकानिष्टलिङ्गी च [ बटेर ] ॥
लट्वा स्वल्पस्तु लडडुक । लाडवाली ॥
वक्रचञ्चु[4] गृध्रक· स्यात् गृधिनी ॥
चिलिनः श्येनसन्निभः ॥ चिल ॥
भृङ्ग. फिंगस्तु धूम्याटः[5] फिंगा ॥
शशाभा मृगमातृका[6] । खँखरियाल ॥
मातृलिङ्ग. स्वर्णचूड
पूति(ः) खट्टासिका तथा ॥ कटास ॥
लम्पाको गण्डिर प्रोक्त गुण्डर.(?) (गुञ्जी I )॥
शालिजात सुगन्धक· । शडियाल ॥
हस्तिनी करिणी नागी हस्तिनी ॥
उद्रो जलबिडालक· ॥ उद्बिराल ॥
द्वीपी तु चन्द्रको व्याघ्र· व्याघ्र ॥
तरक्षुस्तु तिलच्छद[7] । तिलव्याघ्र ॥
सूचीधृक् सूचकी श्वावित्[8] [ सजारु ] ॥
शलूक[9](ः) शलली शली ॥
गण्डूपदो भूमिलता कुँचिया ॥
गन्धोली वरटी तथा । वारली ॥
कीकशा· कृमय सूक्ष्मा· कुथिका ॥
सरघा मधुमक्षिका ॥ मउमाछी ॥

---

1 E वरु कवालेवष्वजो ॥ तोरइ ॥ I रुरू क्वाणे भघ्वजो ॥ लायावा ॥ Read वृकरालो (or वर्करालो) भरद्वाज ? Cf Madanapala, भारद्वाज कर्कराटो व्याघ्राटोऽहिकुटि पर, and Dh., भरद्वाज ककराटो व्याघ्राटो पु यदर्शन Cf also कवार MW. 2 E वापवस्तित्तिर 3 E I. स्वर्गहा Cf Dalhana on Susruta 1.46 67, सुगृहा पीनमस्तका, & ŚK, *s v.* चञ्चुसूचि 4 E I चञ°. 5 E धून्याट Cf Ujjvaladatta on Unadisatra' 1 124, भृङ्ग पिङ्गालिधूम्याटा 6 E मात्रिग I सशभोमृगम त्रिक 7 H तरक्षुस्तु मृगादन ॥ तिलच्छद ॥६४२॥ तिलव्याघ्र ॥ which would suggest two *padas* तरक्षुस्तु मृगादन ॥ तिलच्छदस्तिलव्याघ्र etc 8 E H. स्वाविद् I श्वाविद् 9 H शल्लक I सल्लक.

| | | |
|---|---|---|
| उद्गमो मर्दन(?)[1]श्चैव | | उरस (उड्स) ॥ |
| | दंशश्चारण्यमक्षिका । | डाँस ॥ |
| क्षुद्रशंखः शंखनखः | | समुद्रझिनुक ॥ |
| | प्रोष्ठी तु सफरी द्वयोः ॥ | पोठी ॥ |
| जलशुक्तिश्च शम्बूको[2] | | सम्बुक ॥ |
| | जलौका तु जलायुका । | जोँक ॥ |
| यादस्तु जलजो जन्तु- | | जलजन्तु |
| | र्बहुपादो ऽलिवृश्चिकौ[3] ॥ | विछा ॥ |
| फणी दर्वीकरो भोगी | | सर्प ॥ |
| | मण्डली मण्डलाङ्कितः । | मण्डल्या वोड़ा ॥ |
| रेखाङ्कितस्तु राजीमान् | | ढोँड़ ॥ |
| | वैकरञ्जोऽन्यजातिकः[4] ॥ | जागणिकावड़ा (?) ॥ |
| पूतिकीटः पर्द[5]कीटो | | पादुड़िया ॥ |
| | घुणः काष्ठाशनः[6] कृमिः । | घुण ॥ |
| कुथिताः[6a] पूतिमत्स्यास्तु | | पचा [माछ] ॥ |
| | शुष्कास्ते कटुमत्स्यकाः[7] ॥ | सुखइ ॥ |
| किण्वं कादम्बरीबीजं | | मद्यबीजे ॥ |
| | वल्लूरं शुष्कमांसकम्[8] । | शुष्कमांसे ॥ |
| मण्डुरं लोहजं किट्टं | | मण्डुरे ॥ |
| | मधूच्छिष्टन्तु सिक्थकम्[9] । | मोम ॥ |
| चीवरं भिक्षुसंघाटी | | सन्यासी परिधाने ॥ |
| | च्छत्रकं या [तु][10] छत्रिका । | छाति ॥ |
| सवत्सा सुरभी धेनु- | | धेनु ॥ |
| | र्गृष्टिः प्रथमसूतिका ॥ | |
| चिरसूता बष्कयणी | | |
| | बर्करस्तु युवा पशुः । | |

1 H डंगाना, . Coruption for उद्दंशो मत्कुण° ? 2 E.I. कुम्बूको. 3 E.I. °क. H. द्रुतयानिश्च वृश्चिका. 4 E केवलाञ्जा न्यतानक . 5 E. कर्दु°. I. कर्दकीट ॥ हाजा ॥ 6 E.I.°शनि°. 6a E I. कुथिका . 7 F. omits 735-822... 8 F. वल्लर शुष्कमामय. It places किण्व . . after उपक .. 9 F. places मण्डुर etc., after टङ्कणः .. 10 E I. संकरज जात°. H. यात°.

गलचर्म गवां सास्ना[1]
वृन्तं चीरं च गोस्तनः[2] ॥ गवां स्तन ॥
क्षीरं दुग्धं पयस्तन्यं
सर्पिराज्यं घृतं हविः । घृते ॥
अविसोढमविक्षीरं मेषीदुग्ध ॥
कौम्भं सर्पिर्दशाब्दिकम् ॥
क्षीरजं दधि मङ्गल्यं दधि ॥
मन्दजातन्तु मन्दकम्[3] ।
तन्निःस्नेहं खरं छिन्नं छेना ॥
प्रसूतं गालितं दधि[4] ॥ वस्त्रादिगालित दधि ॥
किलाटः कूर्चिकापिण्डो[5] नष्टदधि ॥
दधिमण्डस्तु मस्तु च । माथु ॥
निर्जलं मथितं घोलं
तक्रं पादजलान्वितम् ॥
जलार्धकमुदश्विच्च
श्वेतारण्यन्तु समोदकम् ।
भृष्टधान्याक्षत लाजाः खई ॥
पृथुकाश्चिपिटास्तथा ॥ चिड़ा ॥
पूपः पूपलिका पोली पुली ॥
आपूपः पिष्टपूपक । पिठा ॥
गोधूमो[7] यवतुल्य. स्यात् गोधूम ॥
कणिका समिता रजः[8] ॥ [मयदा] ॥
पिष्टं कल्को विनीयश्च
स्वरसः पीडितो रस. ।
क्वाथः कषायो निर्यूहो[9]
निर्यासो वेष्टकस्तथा ॥

---

1 E दावा सम्मा, I. सम्मा 2 E I चूर्णंगोरञ्च गोप्टन. F. omits ll. 827-834. 3 H. मल्लजातञ्च मल्लक. I. मन्यजातञ्च मन्यक ॥ मन्यदधि ॥ 4 F. omits क्षीरज...5 E. °पिष्ट°. 6 E.H I. °क्ष°. 7 E. °म. 8 E. कलिक सामभारज । H. वालका.. । वालक ॥ F. omits भृष्टधान्या°... 9 E H.I. omit पिष्ट...

रेणुश्चूर्णं रजः क्षोदः
सम्भारो बहुसंग्रहः[1] ।
अपक ॥
असिद्धमशृतञ्चामं
पक्वन्तु क्वथितं शृतम् ॥ पक्व ॥

आहारोऽभ्यवहारश्च
लङ्घनञ्चापतर्पणम् । उपवास ॥
सौहित्यं तर्पणं तृप्ति-
र्भक्तञ्चैवान्नमोदनम् ॥ अन्ने ॥
प्रतापः स्वेदनं स्वेदो
निरूहश्च निरूहणम्[2] ।
कवड कवलो ग्रासो
नस्य नस्तञ्च नावनम्[3] ॥
स्यन्दनं स्रवणं स्रावः
प्रस्रवः स्रवणं च्युतिः[4] ।
निष्यन्दो मेहनं मूत्रं[5] मूत्र ॥
संस्कारः परिभावनम् ॥ मर्जन ॥
शक्तिः प्रभावः सामर्थ्यं
वीर्यं शौर्यादिलक्षणम् । बल ॥
नासा गन्धवहो घ्राण नासिका ॥
ओष्ठो दन्तच्छदोऽधरः ॥ ओष्ठ ॥
रसज्ञा रसना जिह्वा
कण्ठो निगरणो गलः ।
रुचको दशनो दन्तो
जत्रु ग्रीवा शिरोधरा[6] ॥
कृकाटिकावटु घाटा घाड़ ॥
ओष्ठप्रान्ते च सृक्कणी ।
श्रोत्रं कर्णं श्रुतिः श्रोत्र[8]
पृष्ठदंशाधरे[9] त्रिकम् ॥

1 F. omits सम्भारो. 2 E I निरूपण F. omits सौहित्य. 3 F ends here. 4 H. प्रसेक क्षरणश्च्युत. 5 E मुत 6 E पत्रू पीवा (E I.) शिराधरा 7 E I. जु॰. 8 E. स्रोत. 9 E °शधरो.

मलमार्गे गुदं पायुः
सीवनी सेवनी मता ।
उरो वक्षःस्थलं वक्षः
कुचस्तनपयोधराः ॥
हृदयं हृन्मनःस्थानं
ललाटमलिकं तथा ।
स्फिक् पुलकं कटीप्रोथ-
स्तुन्दस्तु जठरोदरम् ॥
यकृत्प्लीहोदरं[1] कुक्षि-
रूरुसन्धिस्तु वंक्षणः ।
भुजो बाहुः प्रवेष्टो दोः
पादः स्याच्चरणोऽङ्घ्रिपात् ॥
संग्राहो [ग्रहो][2] मुष्टिश्च
हस्तः पाणिः शयः करः ।
आद्योऽङ्गुष्ठस्ततोऽधरा[3]
तर्जनी स्यात् प्रदेशिनी ॥
मध्यमा चाङ्गुलिर्मध्ये
ततश्चाधस्त्व[4]नामिका ।
कनीनिका कनिष्ठान्ते
करजो नखरो नखः ॥
अग्रमांसं मतं वुक्कं
[5][ उण्डुके ] ऽथ मलाशयः ।
तर्पभूस्तिलकं क्लोम[6]
कपोलान्ते हनुः स्मृता ॥
गण्डः कपोलः [गल्लश्च][7]
पेशी मांस[8]लता स्मृता ।
कालेयकं कालखण्डं

1 H. °र. 2 E H. गद°. I. पद°. 3 E I. °र. H. °हस्ता 4 E °स्था°. 5 H. वहूण्डुपेय°.... E.I. omit the *pāda*. 6 E I. व्योम. 7 E I. प्रसूत H. गालश्च. 8 E. मास. H. °सभा.

महास्नायुनि कण्डरा[1] ॥
पालिस्तु कर्णलतिका
वेष्टनं कर्णशष्कुली ।
चुचुकं स्तनयोर्वृन्तं[3]
चिवुकं चाधराधरः ॥
ग्रीवामूलादधः स्कन्धः
स्कन्धस्यान्ते तथांसकम्[4] ।
तस्याधः कोटरे कक्षः
स्याद्दसो बाहुमूलत.[5] ॥
जानु स्यात् सक्थिमध्ये तु
बाहुमध्ये तु कूर्पर. ।
पादग्रन्थि घुंटो गुल्फो
मणिबन्धस्तु हस्तजः ॥
पादग्रन्थ्यधरः पार्ष्णिः
पादाग्रं प्रपद विदु ।
भ्रू पुच्छान्ते त्वथापाङ्गं
नेत्रान्तश्च कनीनिका ॥
[7]कूर्चं नृव्यञ्जन श्मश्रु
कच केश शिरोरुह[8] ।
चक्षूरोमाणि पक्ष्माणि
रोम लोम तनूरुहम् ॥
त्वक्[3] कृत्तिरजिनं चर्म
कटि श्रोणि ककुद्मती ।
शुक्रं बीजं तथा रेतो
रज. स्त्रीरक्तमार्तवम् ॥
मज्जा चास्थिभवः स्नेहः
सारः कीकसमस्थि च[9] ।

---

1 E I. स्नायुश्च वसुना [ वस्नसा ? ] तथा । मूतनाडी महास्नायुनि कण्डलास्फुला शिरा I. 2 E.I. °फुस्र्°. 3 E °यावन्त. 4 E °क: 5 E °क I. °क. 6 E I. °गुल्फा°. 7 E. कूर्वल I. कूर्चन 8 E.I कृन्. 9 H. has after this, मस्तिष्क मस्तुलुङ्ग च मसादिस्नायुकोवन्ती

करोटि मस्तकस्यास्थि
पृष्ठस्यास्थि कशेरुका[1] ॥
कृत्स्नदेहास्थि कङ्कालः
पार्श्वास्थनि तु पर्शुका ।
लता प्रतानिनी वल्ली
वृन्तं पुष्पादिबन्धनम् ॥
पल्लवः स्यात् किशलयं
शुङ्ग[2] शाखानवाङ्कुरः ।
कुसुमं सुमनः पुष्पं
मुकुल[4] कलिका कली[5] ॥
शिफा चाङ्घ्रि जटा मूलं
पर्णं पत्रं दलं छदः ।
छल्ली त्वग् वल्कलं वल्कः
प्ररोहोऽधोमुखोऽङ्कुरः ॥
मार्गः प्रतोली विशिखा
योग्याभ्यासः क्रिया कृति(:) ।
प्रतिश्रवः प्रतिज्ञानं
विधानं च विधिर्विधा ॥
मानं प्रमाणमुन्मानं
प्रतिषेधो निवारणम् ।
प्रपञ्चो विस्तरो व्यासो
विपर्यासो विपर्ययः ॥
परस्परं मिथोऽन्योन्यं
यथार्थं च यथायथम् ।
दोला प्रेङ्खोलनं प्रेङ्खा
प्राभृतं स्यादुपायनम् ॥
निरचुक्नं दन्तशाणं
चपकं मद्यभाजनम् ।

---

1 H. °रू. 2 H. °शृङ्ग. 3 E.H. °वो°, I. शाखो नवो°. 4 H. °ऽ. 5 E. I. end here.

विहारश्च क्रिया चेष्टा
नियमश्च नियन्त्रणा ॥
आधिस्तु मानसं दुःख-
मावी प्रसववेदना ।
जरायुः कललं चोल्वं
[ दोहदो दोहलं मतम् ॥ ][1]
ताम्राद्यावर्तनी मूषा
नेत्रयो र्दूषिका मलम् ।
ज्येष्ठाम्बु तण्डुलाम्बु स्यात्
तुषोदं च तुषोदकम् ॥
कण्डन तण्डुलमलं
चक्रतैलमभृष्टकम् ।
कलना गणना संख्या
दया च करुणा कृपा ॥
पादत्रं पादुकोपानद्
यानं युग्यं च वाहनम् ।
मूत्राशयः पुटो वस्तिः
खल्वं चर्मपुटो दृतिः ॥
व्यजनं तालवृन्तं च
वालव्यजनचामरे ।
आतपत्रं मतं छत्रं
विस्तृतं विततं [ततम्[2] ] ॥
गोपानसी दारु चक्रं [वक्रं ?]
द्वारकाष्ठं च तोरणम् ।
परिघो द्वारगण्डु(:) स्यात् ।
कवाटमरलं तथा ॥
वातायनं गवाक्षं च
द्वारभूमिस्तु देहली ।
मच्छुट्यंगुलिसंदंशः

1 H. दंहोदादेहसमान. 2 H कृनम्.

सारम्भः सुघनः पटः ॥
बहुमूल्यं महार्घ्यं स्याद्
अहतं नवमम्बरम् ।
पाणिमन्थो भ्रमारी च
गण्डूषो मुखपूरणम् ॥
व्यंजनं लक्षणं चिह्नम्
आश्चर्यं चित्रमद्भुतम् ।
प्रश्नः पृच्छानुयोगश्च
कपटं छद्म कैतवम् ॥
मानं गर्वो ह्यहंकारः
शताङ्गः स्यन्दनो रथः ।
[ अवर्णवादोऽवर्णं वाच्य् ][1]
आरम्भः स्यादुपक्रमः ॥
निम्नं गर्तोदरश्वभ्रं
मनोहारि मनोहरम् ।
उच्छिङ्घनं स्यादुद्घ्राणम्
अक्षं करणमिन्द्रियम् ॥
अशुष्कं सरसं चार्द्रं
वानं शुष्कं[2] च नीरसम् ।
यथातथमृतं सत्यम्
अनृतं वितथं मृषा ॥
देवभूयं च देवत्वं
सायुज्यं च सलोकता ।
देवयानं विमानं च
समुद्गसम्पुटौ[3] द्वयोः ॥
निर्माल्यमुज्झितं पुष्पं
निर्मोकः सर्पकञ्चुकः ।
परागः पुष्पजो रेणुः
कोष्ठ (:) शून्यं कुशूलकम् ॥

---

1 H. अववार्त्तं वेदवार्त्तं च. 2 H. वानशुष्कं. 3 H. °ट.

पालनं त्राणमवनं
मैत्रं सख्यं च सौहृदम्।
पराङ्मुखं पराचीनम्
अर्वा(°वा°?)चीनमधोमुखम्॥
प्रतिलोमं प्रतीपं च
नादः शब्दो ध्वनि र्ध्वनः।
अनुलोमं चानुकूलं
स्यादु[त्कण्ठितमु]न्मुखम्॥
शिरोवेष्टनमुष्णीषम्
अटा पर्यटनं भ्रमः।
विद्धं च ग्रथितं प्रोतं
भद्रं [सौम्य][3]मनिन्दितम्॥
शुचि [ पूतं ][4] पवित्रं च
शोभनं चारु सुन्दरम्।
बन्धुरं च नतं नम्रं
[ तीव्रं ][5] प्रबलमुत्कटम्॥
हृद्यं कान्तं प्रियं रम्यं
मनोज्ञं च मनोहरम्।
दारुणं कठिनं क्रूरं
पेशलं मृदु कोमलम्॥
सान्द्रं घनं [ चाविलीनं[6] ]
तरलं विरलं तनु।
निर्मलं विमलं स्वच्छं
म्लानं कलुषमाविलम्॥
स्यानं शीनं घनीभूतं
[ विलीनं ][7] विद्रुतं द्रुतम्।
सुषमं मसृणं श्लक्ष्णं
कर्कशं परुषं खरम्॥

1 H. °मसन मैत्र लेख्य च...2 H. स्यादुद्गण्डिकम्बुन्मुखम्. 3 H. सौख्य°. 4 H. मूत. 5 H स्वभ्र. 6 H. च वल्लन. But वल्लन could not be traced in the dictionaries. 7 H. विज्ञान.

पूर्णं समग्रं सकलं
प्रत्यग्रमपुरातनम् ।
खण्डोऽर्धं शकलं [चोनम्[1]]
[ अतिरिक्तेऽधिकोल्बणम् ][2] ॥
पक्त्रिमं पाकनिर्वृत्तं
क्रियोत्पन्नं च कृत्रिमम् ।
सङ्कीर्णं सङ्कुलं[3] मिश्रं
मलिनं च मलीमसम् ॥
आघातनं वधस्थानं
पाकस्थानं महानसम् ।
इच्छा वाञ्छा स्पृहाकाङ्क्षा
[व्रण][4]वस्ति विकेशिका ॥
लोभः श्रद्धा रुचिश्छन्दो
नेत्रपिण्डो बिडालकः ।
निष्पादोऽतिफलं व्युष्टिः
पुरःसरपुरोगमौ ॥
निदानं कारणं हेतुः
कृत्यं कार्यं प्रयोजनम् ।
अनुध्या चिन्तनं चिन्ता
प्रसादः स्यात् प्रसन्नता ॥
सम्पत् समृद्धिः सम्पत्ति-
र्विपत्तिर्विपदापदौ ।
विचारणा च मीमांसा
प्रतिकर्म प्रसाधनम् ॥
पञ्चत्वं मरणं मृत्यु-
र्मृतश्च कुणपः शवः ।
अग्न्यासया(?)[5]सवः प्राणा
आयुर्जीवश्च जीवितम् ॥

---

1 H. चोलम् 2 H. अतिब्यक्त त्वकोलवणं. 3 H. सक्रं. 4 H. व्रन°. 5 अग्न्यादयो..? cf. Suśruta 3 4.3, अग्नि सोमो वायुः सत्त्व रजस्तम. पञ्चेन्द्रियाणि भूतात्मेति प्राणा.

हानि[1]र्ज्यानि चयो ह्रासः
सञ्चयो वृद्धिवर्धने ।
वादित्र वाद्यमातोद्य
लास्य नृत्यञ्च ताण्डवम् ॥
गान गीत त्रिभिस्तैश्च
सपाद्य ना[2]न्यमन्वि तम ।[3]
उदग्र[ मुन्नत ][4]तुङ्ग
दीर्घं प्राशुञ्च[5]र्वमायतम् ॥
शनैर्मन्द मनागीषद्[5]
विपुलोरु महद् बृहत् ।
हेषित वाजिना नादो
बृ हित गजगर्जितम् ॥
रुदित क्रन्दित क्रुष्ट
शोक शुक् चा[6]नुशोचनम् ।
प्रलापोऽनर्थक वाक्य
विलाप परिदेवनम् ॥
मत्स्यादे र्बन्धन जाल
भग्नास्थिबन्धन कुशी[7] ।
व्रणस्य बन्धन पट्टो
वीतस पत्त्रिबन्धनम् ॥
विशाल पृथु विस्तीर्णं
खर्वो ह्रस्वश्च वामन ।
नव चाभिनव नव्य
पुराण चानव जरत् ॥
स्थावर सुस्थिर स्थास्नु
गतिमाञ्जङ्गमश्चर ।
जङ्घाल प्रजवी वेगी
पान्थश्च पथिकोऽध्वग ॥

1 H हा° 2 H °ण्वि° 3 H has after this, भग्न भुग्न च भगुरम but see 1168 below 4 H °मनुन 5 H पत्वेपुनोह 6 H °वैपाम° 7 H °धोवधन सशी

तृष्णा तर्षः पिपासा तृट्
क्षुद् बुभुक्षा क्षुधापि सा ।
क्लेशो व्यायाम आयासो
रयो वेगः स्यदो जवः ॥
[आप्लुतिः] स्नवनं स्नानम्[1]
अवगाहो निमज्जनम् ।
प्लवनं तरणं तारो
व्रज्या चङ्क्रमणं[2] गतिः ॥
संवेशनं तु शयनं
स्थितिरास्योपवेशनम् ।
हीनं न्यूनं जघन्यं च
क्वणितं कूजितं मतम् ॥
त्रिशूलं त्रिशिखं तद्वद्
वह्निशन्तु वह्निर्नतम् ।
अशनिः कुलिशं वज्रं
काण्डो बाण इषुः शरः ॥
असिः खड्गः कृपाणश्च
कवचं चर्म दंशनम् ।
चापन्तु धनुरिष्वासः
शिविका[3] शुण्डकस्तथा ॥
मिथुनं युगलं युग्मं
तिग्मं तीक्ष्णं खरं पटु ।
स्तोकोऽल्पोऽणुर्लवो लेशः
शश्वन्नित्यं सनातनम् ॥
कृत्स्नविश्वाखिलं सर्वं
निश्चितं निश्चलं ध्रुवम् ।
ओंकारः प्रणवो ब्रह्म
कूटस्थो विभुरव्ययः ॥

1 H. चद्भुति प्रवनं स्नानम्. 2 H. चिक्र°. 3 शिबिका.

चेतश्चित्तं [मनः सत्त्वम्[1]]
आत्मा स्वः पुरुषो विभुः ।
विनाशी नश्वरोऽनित्यो
यज्ञो वाजोऽध्वरः क्रतुः ॥
वेदस्तु श्रुतिराम्नायो
दर्शनं शास्त्रमागमः ।
तमोऽन्धकारस्तिमिरं
खद्योतो ज्योतिरिङ्गणः ॥
देवकुलन्तु प्रासाद-
स्तद्वच्चैत्यं विना मुखम् ।
पितृवनं श्मशानं च
चितिश्चित्याग्निमूश्चिता ॥
कान्तारः प्रान्तरो दुर्ग-
श्चोरः स्तेनश्च तस्करः ।
पाटनं स्याद्विनाशनं[2]
स्फुरणं स्पन्दनं तथा ॥
बाहुयुद्धं नियुद्धं स्याच्
छिलो[3]ञ्छन्तु तथोञ्छकम् ।
[कारीषः पावकः कार्षो[4]]
हयहन्नकमश्वविट् ॥
तृणपूली तु चञ्चा स्याद्
[उलङ्कुलः पिपीलकः[5]] ।
[कुटिलं वेल्लितं[6]] भुग्नं
वृक्णं छिन्नं द्विधाकृतम् ॥
रुग्णं भग्नं च भंगुरम्[7]
अवक्रं प्रगुणमृजु ।

---

1 H. °स सत्त्वमात्मा – 2 H. °नाश° 3 H. स्यात् छिलो°. 4 H. कारिषश्च पावकः कार्षो 5 H. [illegible] स्यादुलुङ्कुल पिपीलकः 6 H. कुटिलोन्दर्त 7 H हिगुणम्, but cf the extra pada after 1088.

साधारणं समानं च
सामान्यं च समानता ॥
जृम्भिका जृम्भनं जृम्भा
क्षवश्च क्षवथुः स्मृतः ।
संकल्पो मानसं कर्म
मेधा स्याद्धारणात्मिका[1] ॥
प्रज्ञापराधो धीभ्रंशो
दिङ्मोहो दिशि विभ्रमः ।
भ्रमो भ्रान्तिर्मतिभ्रंशो
मृगतृष्णा मरीचिका ॥
मोहः प्रमोहो वैचित्त्यं
ज्ञानहानिर्विसंज्ञता ।
वेपथुर्वेपनं कम्पः
स्तैमित्यं जडिमा[द्रुता[2]] ॥
प्रदेहो बहुलः कोष्णः
प्रलेपः शीतलस्तनुः ।
लिप्तो दिग्धः प्रलिप्तश्च
लक्तकः प्रोतकर्पटः [°टौ ?] ॥
गुण्ठितं [3]रूषितं कीर्णम्
अक्तो[4]ऽभ्यक्तश्च म्रक्षितः ।
नष्टसंज्ञो विसंज्ञश्च
विह्वलो विकलस्तथा ॥
मूर्च्छितस्तन्द्रितो[5] मूढो
दीर्घसूत्री चिरक्रियः ।
खट्वाघाती लग्नदन्तो
नग्नोऽवासा दिगम्बरः ॥

---

1) स्यान्धाधघात्मिका 2 H °द्रु ता 3 H. रूषित 4 H कीर्णे गुप्तो. 5 H. स्तुम्भितो.

